यदि वा परिगृह्य तं खगं क्वचन क्रीडति मत्प्रतीक्षया ।
इति चेतसि चिन्तयंश्चिरं न विनिश्चेतुमभूदलं नलः ॥ ६ ॥
गगने चरतः पतत्रिणः स्पृहया यद्दयिता महारयम् ।
किमतोऽप्यधिकं प्रथिष्यते हतभाग्यस्य नलस्य दुर्यशः ॥ ७ ॥
क्व नु तां विचिनोमि शाखिनां विटपैर्दृष्टिपथोऽपि मे हृतः ।
पदपङ्क्तिरपीह नेक्ष्यते तृणगूढासु वनान्तभूमिषु ॥ ८ ॥
इह केन पथाहमागतः क्व पुनः संप्रति गन्तुमुत्सुकः ।
इति वेदितुमप्यकोविदः कथमेनां मृगये मृगेक्षणाम् ॥ ९ ॥
मृगयापरिशीलिनोऽप्यलं यदि संमोहवतीह मे मतिः ।
वनवर्त्मनि तत्कथं नु सा विनिवृत्योटजमागमिष्यति ॥ १० ॥
पशवः प्रतिवक्तुमक्षमास्तरवोऽमी सुतरामचेतनाः ।
कथयिष्यति हन्त कोऽत्र मे पदवीं तां दयिता यया ययौ ॥ ११ ॥
इह चेत्परिपालयामि तामपथज्ञा कथमेष्यति स्वयम् ।
यदि यामि यदृच्छया क्वचित्कथमेषा नयनातिथिर्भवेत् ॥ १२ ॥
इति तत्र वनोदरे नलः प्रबलश्वासविधूसराधरः ।
सुचिरं परिचिन्तयन्नपि प्रतिपेदे न विधेयनिश्चयम् ॥ १३ ॥
अथ निर्झरशीकरस्पृशा पवमानेन मृदूकृतश्रमा ।
अवलम्ब्य लताः शनैः शनैर्विचरन्तीदमुवाच भीमजा ॥ १४ ॥
परिगृह्य पतत्रिणावुभौ त्वमसीति प्रतिपन्नमेव मे ।
अनयोः कथमेकमप्यहो दमयन्त्यै ननु न प्रयच्छसि ॥ १५ ॥
पुर एव नरेन्द्र दृश्यसे विनिगूढार्धवपुर्लतान्तरे ।
इह दृग्विषये स्थितोऽपि मे प्रतिवाचं न कथं प्रयच्छसि ॥ १६ ॥
अलमेभिरकाण्डकौतुकैस्तरुमूलेऽत्र निषीद नैषध ।
चरणौ पथि खेदनिःसहौ तव संवाहयितुं समुत्सहे ॥ १७ ॥
रजसा परिधूसरीकृतं तुहिनेनेव वपुः सुधानिधेः ।
परिमार्ष्टुमनाः शनैः प्रभो वदनं तातकमेष मे करः ॥ १८ ॥

रविरम्बरमध्यमाश्रितः क्रमशस्ते वलितक्लमं वपुः ।
इदमम्बु गृहाण शीतलं नलिनीपत्रपुटे मया हृतम् ॥ १९ ॥
अधिकुञ्जमिदं शिलातलं शिशिरं निर्झरवारिशीकरैः ।
इह ते श्रमशान्तये मया शयनीयं नवपल्लवैः कृतम् ॥ २० ॥
परिहासकुतूहलेन मां यतसे त्रासयितुं कियच्चिरम् ।
ननु वञ्चनयानया कथं दयिता सा सभया भविष्यति ॥ २१ ॥
यदि वान्यवधूचितं भयं नृपते त्वन्महिषीमपि स्पृशेत् ।
अवधारय लोकवीर तद्भविता तेन विलज्जसेऽत्र कः ॥ २२ ॥
इति तत्र गिरः पदेपदे निगदन्ती विपिनं विगाह्य तत् ।
क्वचिदप्यविलोक्य वल्लभं दमयन्ती विललाप विक्लवा ॥ २३ ॥
विपिने चरतोः पतत्रिणोरपराधः कतमः कृतो मया ।
यदिमौ नितरां प्रतार्य मां दयितं मे तिरयांबभूवतुः ॥ २४ ॥
अपि सप्तसमुद्रमुद्रिता वसुधा यस्य भुजेन रक्षिता ।
वनवाससखीमपि प्रियां स कथं रक्षितुमक्षमायते ॥ २५ ॥
कृतवानसि नाथ सांप्रतं हतभाग्यामिह मां यदत्यजः ।
असवस्तु नितान्तनिष्कृपाः प्रतिमुञ्चन्ति न मामकं वपुः ॥ २६ ॥
महतीह विपन्मयेऽम्बुधौ तरिरासीत्त(त्त्व)दुपासनैव मे ।
विधिनाद्य वियोजिता तया विनिमग्नास्मि वने निराश्रया ॥ २७ ॥
इह मां त्वदधीनजीवितां कथमुत्सृज्य गतोऽसि नैषध ।
करुणापि पणीकृता ध्रुवं नृपलक्ष्मीरिव दीव्यता त्वया ॥ २८ ॥
अपि वीक्षितुमक्षमा परैस्त्वदभिन्नैव पुरा विदर्भजा ।
फणिना त्वगिव त्वयोज्झिता शिशुनाप्यद्य पराभविष्यते ॥ २९ ॥
इह धन्यतमा परं मही क्वचिदास्ते सहितैव या त्वया ।
भवता रहिता दमस्वसा नृपलक्ष्मीश्च गताद्य शोच्यताम् ॥ ३० ॥
वसुधे विदधामि तेऽञ्जलिं न सपत्नीति रुषं कुरुष्व मे ।
कथय प्रभुरङ्घ्रिमुद्रया भवतीं यत्र तनोत्यलंकृताम् ॥ ३१ ॥

अविषह्य विपाकजृम्भितं दमयन्त्या किल, दुष्कृतं कृतम् ।
अपि काननवासविक्लवं दयितं सा परिहाय जीवति ॥ ३२ ॥
अयि पाणिग्रहणेन मां प्रियां गमयित्वा सुखिनीषु मुख्यताम् ।
कथमाशु तपस्विनीष्वपि प्रथमोदाहरणत्वमानयः ॥ ३३ ॥
सुकृतं दुरितं च भूपते मम लोकोत्तरमेव दृश्यते ।
यदहं दयिता तवाभवं परिमुक्ता च वने यतस्त्वया ॥ ३४ ॥
हृदयं मम निर्ममे विधिः कुलिशेनेति मया विनिश्चितम् ।
यदिदं शतधा न भिद्यते दयित त्वद्विरहाग्नितापितम् ॥ ३५ ॥
परलोकजुषोऽपि वल्लभाननुगच्छन्ति कुलोद्भवाः स्त्रियः ।
हृदयेश्वरमन्तिके स्थितं मदृतेऽन्या कतमा विहास्यति ॥ ३६ ॥
मम पाणिपरिग्रहः परं समभूत्ते विपदां निबन्धनम् ।
ग्रसते खलु सिंहिकासुतस्तपनं दर्शतिथेः समागमे ॥ ३७ ॥
..................तेजसा..............खलु तिग्मदीधितिः ।
चरमाद्रिदरीमिवाद्य मां कथमासाद्य गतोऽस्यदृश्यताम् ॥ ३८ ॥
अथ सा नयनाम्बुवीचिभिः प्रसृताभिर्विनिगूढसंचरा ।
पुनरेव नरेन्द्रनन्दिनी परितस्तद्विचचार काननम् ॥ ३९ ॥
इतरेतरयुद्धसंभ्रमैर्महिषैः क्वापि विकर्दितक्षितिः ।
विटपैरवनीरुहां क्वचिद्गजभग्नैः प्रतिरुद्धपद्धतिः ॥ ४० ॥
असमग्रविशीर्णफेरवं जठरेणाजगरेण कुत्रचित् ।
क्षुधितेन तरक्षुणा क्वचित्प्रसभं क्रान्तकुरङ्गशावकम् ॥ ४१ ॥
क्षुभितर्क्षमुखोज्झितैरपां पृषतैः क्वापि विकीर्णकुज्झटिः ।
दवपावकधूममण्डलैः क्वचिदाविष्कृतमेघडम्बरम् ॥ ४२ ॥
मृगराजचपेटताडितैः करिभिः क्वापि विमुक्तचीत्कृतिः ।
धरणीविवरार्धनिर्गतैः फणिनिर्मोकचयैश्चितं पदम् ॥ ४३ ॥
इति तत्र भयंकरे वने न भयं प्राप भृशं विदर्भजा ।
हृदये नवशोकविक्लवे नहि भावान्तरमर्पयेत्पदम् ॥ ४४ ॥

अनिशं प्रियदर्शनेच्छया विचरन्तीं परिखेदिनीमपि।
सदया इव विश्रमाय तां रुरुधुः काननवीरुधः क्वचित्॥ ४५॥
कृतकेशचयग्रहा क्वचित्क्वचिदाकृष्टनिचोलपल्लवा।
क्व च दुर्ललितस्तनान्तरा कुटिलैः काननकुञ्जकण्टकैः॥ ४६॥
पृषतीभिरिवोपशिक्षिता वनराजीश्चरितुं निरन्तराः।
भ्रमितुं धरणीभृतां दरीर्भुजगानामिव शिष्यतां गता॥ ४७॥
अवगाहितुमद्रिनिम्नगाः शफरीणामिव सख्यमाश्रिता।
जलदाम्बुहिमातपग्रहे प्रतिपन्नेव लतासु बन्धुताम्॥ ४८॥
फणिभिश्चरणाग्रपीडनादधिगुल्फं वलयत्वमागतैः।
प्रतिमुक्तपदाङ्गदेव सा विलपन्ती व्यचरत्क्वचित्क्वचित्॥ ४९॥
अथ भीमसुतां शठो विधिर्विचरन्तीं विपिने यदृच्छया।
महताजगरेण कुत्रचित्प्रतिरुद्धे पथि संन्ययोजयत्॥ ५०॥
द्रवतामपसार्य वेधसा कठिनत्वं यमुनेव लम्भिता।
नभसः स्खलितेव कालिका तनुरेतस्य तया व्यलोक्यत॥ ५१॥
अतिदीर्घतया वनेचरैरसमप्रेक्षितभोगवैभवम्।
महिषौघविषाणतामितैः मुहुदंष्टैरप्यकृतव्रता क्वचित्॥ ५२॥
……रधिपृष्ठमाचितं रचितं सेतुमिवासितोपलैः।
समुपाश्रितपार्श्वभित्तिकं शयनागारधिया करेणुभिः॥ ५३॥
उदरे दरभिन्नकञ्चुके परितश्छिद्रसितैर्निरन्तरे।
वृकशल्लकिजम्बुकैश्चिरं सकुटुम्बैर्गमितं निवासताम्॥ ५४॥
अवलोकयति स्म केवलं पृथुदीर्घाङ्गमुखं विदर्भजा।
भुजगत्वममुष्य सा पुनर्न विवेदान्तिकमप्युपागता॥ ५५॥
विधिना निधनाय देहिनां विहितं यन्त्रमिवातिदारुणम्।
सहसा यमसद्मयायिनां विवृतं द्वारमिवार्गलोज्झितम्॥ ५६॥
विगलद्गरलान्धकारितं पवमानग्रहणाय जृम्भितम्।
अवनीधरकंदरभ्रमा दमयन्ती प्रविवेश तन्मुखम्॥ ५७॥

अथ मृगयुभिरेकः काल्यमानः कुरङ्गः
प्रतिपदमनुयद्भिस्त्रासितः सारमेयैः ।
इषुविहतविशीर्णैः शोणितैः कीर्णवर्त्मा
पृथुनि वदनरन्ध्रे प्राविशत्पन्नगस्य ॥ ५८ ॥

तदनु शोणितबिन्दुभिरङ्कितामनुसृता सरणिं हरिणस्य ते ।
कलितकर्णशराः सशरासनाः सरभसं शबराः शतशोऽभ्ययुः ॥ ५९ ॥

हा नाथ कुत्र गतवानसि मां विहाय
भूयः करिष्यसि कदा नयनोत्सवं मे ।
इत्थं गिरः प्रतिपदं प्रतिपादयन्ती
भैमी चचार भुजगस्य मुखान्तरेऽपि ॥ ६० ॥

समन्ताद्भ्राम्यन्ती पृथुलमुरगस्यास्यविवरं
न यावद्वैदर्भी समभजत कण्ठान्तिकमपि ।
किराताः पीनत्वादविचलतनुं तावदपि तं
द्विधा मध्ये चक्रुस्तरुमिव निशातैः परशुभिः ॥ ६१ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृते सहृदयानन्दे महाकाव्ये नलचरिते दमयन्तीविलापो नामैकादशः सर्गः ।

द्वादशः सर्गः ।

तदनु ते भुजगस्य मुखे स्थितां किमपि लक्ष्यतनुं सहजश्रिया ।
प्रतनुनीलवनान्तरचारिणीं ददृशुरिन्दुकलामिव सुन्दरीम् ॥ १ ॥
समपकृष्य ततस्तलिनोदरीं गरलदाहवशाद्गतचेतनाम् ।
व्यपगतासुमिव प्रतिपद्य तां मृगयवोऽपि विषादमुपाययुः ॥ २ ॥
शिशिरनिर्झरशीकरसेचनैः प्रतिमुहुर्विहितैरपि संभ्रमात् ।
चिरतरं रचितैरपि यत्नतः शिखिशिखण्डकदम्बवीजनैः ॥ ३ ॥
अपि च मन्त्रपदैर्विषहारिभिः शशिमुखीमनुपागतचेतनाम् ।
समपहाय यथागतमेव ते प्रतिययुर्मृगबन्धनलालसाः ॥ ४ ॥
तदनु कोऽपि तपोनिधिराययौ स्थलमिदं समिदाहरणोत्सुकः ।
अयमलोकत तां पृथिवीपतेः प्रणयिनीं पतितामवनीतले ॥ ५ ॥

यदि परासुरियं वपुषः श्रिया रुचिरया न कथं परिहीयते ।
श्वसिति वा न कथं यदि निद्रया निबिडया परिमुद्रितलोचना ॥ ६ ॥

वपुरिदं भुवनत्रयमोहनं सुहृदिदं मदनस्य नवं वयः ।
किमुत घोरतरे विपिनान्तरे निपतितेयमितस्ततलिनोदरी ॥ ७ ॥

यदि तु मोहयितुं यमिनां मनः सुरवधूः प्रहिता हरिणा दिवः ।
विरहिता ललितैः स्मरविभ्रमैरियमुपैति दशां कथमीदृशीम् ॥ ८ ॥

अपहृता कुटिलैः क्षणदाचरैस्त्रिदिवतो यदि कापि सुराङ्गना ।
न खलु तैर्मिलिताकृतिरीदृशी व्यपगतासुरपीह विमुच्यते ॥ ९ ॥

पुररिपोर्नयनार्चिषि भस्मतां गतवतो दयितस्य शुचाकुला ।
त्रिषु जगत्सु परिभ्रमणश्रमाद्ध्रुवमियं पतिता स्मरवल्लभा ॥ १० ॥

नहि नहि द्युसदा करुणावशात्पुनरवाप्तवता रुचिरं वपुः ।
प्रणयिना सह सा भुवनत्रये विहरतीति वदन्ति पुराविदः ॥ ११ ॥

इति वितर्कशतं परिवर्तयन्नपि न तां स मुनिर्निरधारयत् ।
क्रमवशाद्विशदैरथ लक्षणैः किमपि निःश्वसितं समभावयत् ॥ १२ ॥

कृतरुषा कलिना हृतसंपदा तत इतश्चरता विपिनोदरे ।
विरहितां दयितेन नलेन तां विषधरस्य विषेण विचेतनाम् ॥ १३ ॥

समधिगम्य समाधिबलान्मुनिर्मनसि खेदमवाप मुहुर्मुहुः ।
परगतामपि दुःखपरम्परां कृतधियो हि निजामिव मन्वते ॥ १४ ॥

पुनरवेक्ष्य तथापतितां भुवि प्रियतमां महिषीं निषधेशितुः ।
विधिमपास्तकृपं परिभर्त्सयन्मुनिरिदं मनसा समचिन्तयत् ॥ १५ ॥

विपदि मग्नमवेक्ष्य जनं जनः प्रभुरपि प्रतिकर्तुमनुद्यतः ।
कुमतिराशु करोति मलीमसं निजकुलं यशसापि समुज्ज्वलम् ॥ १६ ॥

तपसि राज्यसुखेऽपि समाहिते विविधविघ्नकृतां विनिवारणैः ।
नृपतयो मुनयश्च परस्परं विनिमयेन भजन्त्युपकारिताम् ॥ १७ ॥

इति विचिन्त्य मुनिर्नृपतेः प्रियामभिषिषेच जलैरभिमन्त्रितैः ।
तदनु चेतनया च शुचा च सा युगपदेव बभूव समन्विता ॥ १८ ॥

चरणयोः प्रणतां स विदर्भजां समभिनन्द्य तपोनिधिराशिषा ।
विगलदश्रुतरङ्गितलोचनामिदमुवाच सुधामधुरं वचः ॥ १९ ॥
अयि कुरुष्व कृशोदरि मा शुचं विधिरभूत्करुणासुमुखस्त्वयि ।
विचरतोऽपि वने हि यदृच्छया त्वमसि यन्मम दृक्पथमागता ॥ २० ॥
त्वमसि यस्य तनूदरि वल्लभा वनमिदं च यथागतवत्यसि ।
समधिगम्य समाधिबलादिदं मम मनः सुतरां परिदूयते ॥ २१ ॥
तदिह मेऽस्ति तपश्चिरसंचितं किमपि तेन नलः सुलभोऽस्तु ते ।
क्षितिमिमां च समुद्धृतकण्टकां समनुशास्तु चिरं मुदितस्त्वया ॥ २२ ॥
अनुपलब्धपदं विविधैर्भयैः सुलभमूलफलं विमलोदकम् ।
क्लमभृतां क्लमभेदनमाश्रमं समवलोकय मामकमग्रतः ॥ २३ ॥
इह दिनानि कियन्त्यपि विश्रमं विदधतीं भवतीमवनीन्द्रजे ।
सकरुणैर्मुनिभिः कृतशासनाः परिचरन्तु तपोनिधिकन्यकाः ॥ २४ ॥
इति मुनेर्वचसापि नृपात्मजा न हृदयं विदधे किल विश्रमे ।
सुखिनि दुःखिनि वा दयिते दशां तदुचितामनुयान्ति पतिव्रताः॥२५॥
अवितथं परिचिन्त्य वचो मुनेर्निजमवेक्ष्य च भाग्यविपर्ययम् ।
किमपि कन्दलितां दलितां पुनर्निजमनोरथसिद्धिममंस्त सा ॥ २६ ॥
अथ मुनिं प्रणिपत्य विदर्भजा विदधती विपिनेषु विगाहनम् ।
पथिषु यद्यदवैक्षत विक्लवा सपदि तत्तदुपेत्य जगाद सा ॥ २७ ॥
स्थगयति त्रिदिवं शिखरोन्नतिर्धरणिमावृणुते परिणाहिता ।
स्पृशति मूलमधोभुवनं ततः किमपि नाविदितं त्रिजगत्सु ते ॥ २८ ॥
स्थिरतया स्थितिहेतुतया भुवः प्रथितवंशतयोन्नतिमत्तया ।
अमितसत्त्वतयाप्यनुयासि यं क्षितिधरेन्द्र वद क्व स नैषधः ॥ २९ ॥
अपि मनःशिलया घटितं गिरे तव वपुर्विषमं कठिनं च यत् ।
विफलमेव करिष्यसि तन्मम प्रियतमस्य निवेदनमीप्सितम् ॥ ३० ॥
यदपि मामवलोक्य गिरेस्तटादिह समागमवत्यसि निम्नगे ।
तदपि सेत्स्यति मे त्वयि नेप्सितं न खलु वाक्पटुतास्ति जडात्मनाम्॥३१॥

गिरितटादिह संप्रति निम्नगे ध्रुवमुपागतवत्यसि मत्कृते।
तदपि मे प्रथयिष्यसि न प्रियं प्रकृतिवक्रगते करुणा कुतः॥ ३२॥
अयि मृगेन्द्र निवेदय मे प्रभु..............................।
सपदि वा यदि वा जननान्तरे परिचरामि पुनर्निषधेश्वरम्॥ ३३॥
हरिण मां दयितं परिपृच्छतीमपि कथं प्रतिवक्षि न किंचन।
ध्रुवमिमं मृगयत्सु कृतागसं स्मरसि तेन मनः कलुषं तव॥ ३४॥
जनपदेषु विहृत्य विहंगमानुपगतान्निशि पृच्छत मे पतिम्।
यदि न ते कथयन्ति तदाशु तान्विटपतो विनिपातयत द्रुमाः॥ ३५॥
त्वमनुरागसमृद्धिमिमां परं वहसि कीर मुखे न तु चेतसि।
परुषवागपि नोत्सहसे यतः स्फुटमुदन्तमुदीरयितुं प्रभोः॥ ३६॥
इति प्रलापानसकृद्वितन्वती विगाह्य शैलांश्च वनोदराणि च।
दिनावसाने कृतविश्रमं क्वचिद्ददर्श सार्थं वणिजां विदर्भजा॥ ३७॥
जनतां विलोक्य सुचिरेण तत्र सा नयने निवेश्य दयितेक्षणाशया।
अविदूर एकतरुभिस्तिरोहिता निषसाद भीमतनयावनीतले॥ ३८॥

अथास्तसंस्थे मृदुधाम्नि भानौ निरन्तरे तत्र वने निकुञ्जे।
अदृष्टपारस्तिमिराम्बुराशिर्वेलामतिक्राम्य समुज्जजृम्भे॥ ३९॥
आलोकसंपत्तिरुवास तुङ्गे चकार निम्ने पदमन्धकारः।
परस्परस्पर्धिनया तदानीमकारि ताभ्यां जगतो विभागः॥ ४०॥
दरीषु येषामवनीधराणां लब्धोदयस्तानपि जग्रसे यत्।
तेनैव कृत्स्नं चरितं खलानां गाढोऽन्धकारस्तुलयांबभूव॥ ४१॥

रन्ध्रेषु प्रथमं प्रविश्य तदनु प्राप्य स्थलीषु स्थितिं
छिद्राण्याशु तिरोदधत्कवलयत्तुङ्गांस्ततः क्ष्माभृतः।
विष्वक्प्रौढतमं तमो जगदिदं सर्वत्र्यतां प्रापय-
व्याचक्रे चरितं युगान्तसमयोद्वेलस्य वारांनिधेः॥ ४२॥

विधिरतनुत सृष्टिं दृष्टिशून्यां किमन्यां
व्यरचयदथवैनां रूपसंपत्तिहीनाम्।

इति जगति विवेक्तुं कोविदः कोऽपि नासी-
दलिकुलमलिनाभैरुन्मिषद्भिस्तमोभिः ॥ ४३ ॥

भूयोभूयो वर्त्मसंबाधखेदाद्भेजे निद्रां दुःसहः पान्थसार्थः ।
शोकोर्मीभिर्बोध्यमानानुवेलं निर्निद्रासीत्केवलं राजपत्नी ॥ ४४ ॥

नीलाम्भोरुहिणी कलिन्दतनया तोयं प्रसूनैरिव
स्वैरङ्गैर्मलिनैस्तदन्धतमसं संम्लापयन्ती भृशम् ।
उत्क्षिप्तैः क्षितिरेणुभिः कलुषतां संप्रापयन्ती नभः
स्पर्शेनारुजती तरून्करिघटा वात्येव तत्राययौ ॥ ४५ ॥

अभ्यर्णे कुलमवलोक्य कुञ्जराणां क्रोशन्त्यामसकृदपि क्षितीन्द्रपत्न्याम् ।
अध्वन्याः कतिपय एव बोधमापुर्दुर्वारं विधिविहितं हि देहभाजाम् ॥ ४६ ॥

असंयमितमूर्धजानविशदस्वरान्निद्रया
स्खलच्चरणपल्लवान्विकृतवेषमुत्तिष्ठतः ।
विलोक्य पथिकानिभाः समयरोषमुज्जृम्भित-
व्यधुः सपदि चीत्कृतैः क्षुभितसत्त्वमागाद्वनम् ॥ ४७ ॥

अध्वक्लान्त्या निःसहाङ्गं प्रसुप्तास्ते वैदर्भ्या सत्वरं बोध्यमानाः ।
धात्रा यत्नेनाशु संप्रेर्यमाणैर्निद्रां दीर्घां प्रापिताः केऽपि नागैः ॥ ४८ ॥

रोषोत्सेकवशादुरांसि चरणैराक्रम्य केषामपि
प्रोच्छिद्याग्रकरैः शिरांसि करिणो दूरं समुत्चिक्षिपुः ।
शाखासंधिषु लग्नकेशनिचयैरस्रच्छटाभिर्वृत-
यैरासन्परिणामिभिः फलभरैः पूर्णा इवोर्वीरुहः ॥ ४९ ॥

पान्थाः केचिद्दलितवपुषः कुञ्जराणां विषाणै-
रस्रोद्गारं सपदि मुमुचुर्जीवितैः सार्धमेव ।
भग्रो भूयः सरभसपदाक्रान्तिभिश्चूर्णपेशं(षं)
निष्पिष्टाङ्गाः कतिचिदपरे भेजिरे पञ्चकत्वम् ॥ ५० ॥

निद्रयाथ तमसा च विक्लवाः केचिदन्धितदृशः पदेपदे ।
क्वापि विश्रमपदं न भेजिरे कुञ्जकुञ्जरविचेतनाक्षमाः ॥ ५१ ॥

छिन्नार्धाङ्गान्पल्लवैः पादपानामुत्तुङ्गानामग्रशाखासु लीनान् ।
त्रासान्मौनं संश्रितानध्यगच्छन्निश्चित्यान्ये वानरा वा नरा वा ॥ ५२ ॥
इत्थं तत्पथिककुलं प्रमथ्य यूथे नागानां गतवति ये हतावशिष्टाः ।
प्रातस्ते विपदि तथा कृतोपकारां वैदर्भीं प्रणतिभिरर्चयांबभूवुः ॥ ५३ ॥
अथ सुचिरमसौ परिभ्रमन्ती वनभुवि कान्तमवीक्ष्य खिद्यमाना ।
पथि पथि पथिकाननुप्रयान्ती पुरमविशत्पृथिवीपतेः सुबाहोः ॥ ५४ ॥
अथ तत्र पुरे परिभ्रमन्तीं जननी प्राप्तदया नृपस्य तस्य ।
शुभलक्षणलक्षितानुभावां तनयां स्वामिव पालयांबभूव ॥ ५५ ॥
अथ चरैर्विनिवेदितलक्षणां विरहवेदनया विधुरां सुताम् ।
द्रुतमुपेत्य विदर्भमहीपतिर्गमयति स्म निकेतनमात्मनः ॥ ५६ ॥
लावण्यमात्रपरिशिष्टवपुः प्रयत्नाद्दृष्टापि सा विरहिता निषधेश्वरेण ।
अन्त्या कलेव शशिनस्तिमिरं समग्रं शोकं पितुः शमयितुं क्षमतां न भेजे ॥ ५७ ॥

अन्वेषणाय निषधाधिपतेः समन्ता-
दूतान्प्रतीतवचसः प्रजिघाय भीमः ।
भैमी तु तस्य भवने स्वजनैर्वृतापि
बन्दीव बाष्पकलुषा दिवसाननैषीत् ॥ ५८ ॥

चिरं चरन्नपि विपिने न विव्यथे विदर्भजां सविधगतां विलोकयन् ।
तया पुनर्विरहमवाप्य जीवितं क्षणार्धमप्यमनुत निष्फलं नलः ॥ ५९ ॥

इति श्रीसान्धिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते वैदर्भीविदर्भानुप्रवेशो नाम द्वादशः सर्गः समाप्तः ।

## त्रयोदशः सर्गः ।

अथ चेतसि शोकवेगभाजि स्थगिते दृष्टियुगे च बाष्पपूरैः ।
श्रुतवानपि नैषधेश्वराय प्रतिपेदे करणीयमूढभावम् ॥ १ ॥
बहु तत्र विलप्य बाष्पवारां पृषतैर्निष्पतितैर्वनस्थलीषु ।
नवमेघजलाभिषेकतः प्रागपि सौरभ्यमुदैरयन्नगेन्द्राः ॥ २ ॥
अथ तत्र कदापि वाति वाते रविरश्मिप्रकरैः प्रकामतप्ते ।
उदभूद्विपिने मिथस्तरूणां विटपाघट्टनसंभवः कृशानुः ॥ ३ ॥

अनतिप्रसृतेऽमितः कृशानौ गगनाग्रस्पृशि धूमचक्रवाले।
ननृतुः क्षणमुन्मदाः सकेकं नवमेघोदयशङ्किनो मयूराः॥ ४॥
विटपानवनीरुहां कृशानोः स्पृशतीष्वग्रशिखासु लोहितासु।
सुरभेरुदयं विनापि वन्या परितः पुष्पितकिंशुकेव रेजे॥ ५॥
कुसुमान्यपहाय पादपानां भ्रमरैर्धूमसमाकुलैः पतद्भिः।
तरसैव शिखाङ्कुराः कृशानोरसकृन्निर्गलदञ्जना इवासन्॥ ६॥
लिलिहुर्विरला मुखैश्चकोराः पततोऽङ्केषु समन्ततः स्फुलिङ्गान्।
अपरे त्वभिपत्य संहतास्तान्कृतरोषा इव भस्मसाद्वितेनुः॥ ७॥
रुरुधुर्गगनं शिखाः कृशानोरुपरि व्याततसान्द्रधूमसंघाः।
अवलीढघनानि काञ्चनाद्रेः शिखराणि द्युतिभिर्विडम्बयन्त्यः॥ ८॥
अपहाय कुलायकुञ्जगर्भान्पततामुत्पततां दिधक्षयेव।
सह धूमचरैर्विजृम्भमाणा सपदि व्योम ललङ्घिरे दवोल्काः॥ ९॥
भृशमाकुलतामुपेत्य धूमैर्विविशुः क्ष्माधरकंदरेषु सिंहाः।
अपि तेषु हविर्भुजि प्रविष्टे पुटपाकं झटिति प्रपेदिरे ते॥ १०॥
विवरैरुपसृत्य कंदरायां ज्वलति ज्वालिनि तत्र चित्रभानौ।
घनधूममये महान्धकारे गिरिरुल्कामुखवद्व्यलोकि कैश्चित्॥ ११॥
चमरान्परिधावतः समन्ताद्वनवीथीषु नितान्तमार्तिभाजः।
सरलायतचामरप्रसङ्गाननुधावन्निव पावकश्चकाशे॥ १२॥
अपि तीर्णवतां रयातिरेकाद्वनराजिः परितः प्रदह्यमाना।
परिणाहिषु चामरेषु लग्ना चमराणामनलः सुदुस्तरोऽभूत्॥ १३॥
परितः पवनेन कीर्यमाणान्क्षपयन्तः करशीकरैः स्फुलिङ्गान्।
अभितापभृतोऽपि वारणेन्द्राः क्षणमासन्वनचारिणां शरण्याः॥ १४॥
सहसा द्रवणाक्षमांस्तनूजांश्चरणैः स्वैः परिवार्य गोपयन्त्यः।
पृषतीः परिमन्थरं व्रजन्तीः सह तैरेव ददाह कृष्णवर्त्मा॥ १५॥
अधिभूधरसानु विद्रुतानां परितः शल्लकिनां शरीरलग्नः।
प्रतिशल्लकशेखरं प्रसर्पन्नपि सप्तार्चिरसंख्यकार्चिरासीत्॥ १६॥

निजपल्लवभक्षणापराधं परिचिन्त्येव महीरुहः सरोषाः ।
प्रतिरुध्य लताभिरभ्रशृङ्गे पृषतानुत्पति(त)तोऽग्नये वितेरुः ॥ १७ ॥
न शरीरभृतां परं कृशानुः प्रसरन्नाशु जहार जीवनानि ।
सरसां सरितां च तीरकक्षे परिसर्पन्क्रमशस्तथैव चक्रे ॥ १८ ॥
सरितामविभावनीयरूपं सहसाविश्य जहार जीवनं यत् ।
अतएव बभार काननाग्निः समदाभूतपदाभिधां यथार्थाम् ॥ १९ ॥
अपि पल्वलमुण्वलं झषौघं परितापातिशयं तथा जगाम ।
इह कोलकुलं विविग्नमग्नेर्बिलमग्नं न प(य)थोज्जगाम जीवत् ॥ २० ॥
दरदग्धवराहदेहजातैः परिदिग्धानि भृशं वसाप्रवाहैः ।
विपिनानि समश्नु(श्न)तः कृशानोरुपदंशत्वमगुः पुलिन्दपत्न्यः ॥ २१॥
सविधे परिधावतः कुरङ्गान्न किराताः शरलक्ष्मतामनैषुः ।
दवपावकजातसंभ्रमाणां शबरीणां परिरक्षणैकतानाम् ॥ २२ ॥
धवलीकृतमूर्तयः समन्तादवकीर्णैः पवनेन भस्मजालैः ।
गिरयोऽस्थिचया इवावशिष्टाः समभूवन्परिदग्धकानना[ना]म् ॥ २३ ॥
इति तत्र चिराय दह्यमाने विपिने भूमिपतिर्विगाढशोकः ।
विललाप विदर्भसंभवायामपराद्धं ज्वलनस्य शङ्कमानः ॥ २४ ॥
अवलोक्य शिखाशतैः करालं प्रसरन्तं परितः कृशानुराशिम् ।
दमयन्ति मया शठेन मुक्ता कमरण्येषु करिष्यसे शरण्यम् ॥ २५ ॥
ज्वलनस्य विवाहसाक्षिणोऽपि भ्रमणे नासि पुरा नितान्तखिन्ना ।
मृदुलाङ्गि कथं नु संप्रति त्वं वनवह्नेर्विषहिष्यसेऽभितापम् ॥ २६ ॥
दयिते तव विप्रयोगजन्मा ज्वलनो मां प्रबलश्चिरादधाक्षीत् ।
अधुनाप्यधिकं करिष्यतेऽसौ किमिवा····वनपादपप्रसूतः ॥ २७ ॥
तव सुन्दरि विप्रयोगजन्मा हृदि योऽयं मम जृम्भतेऽनुवेलम् ।
उपगन्तुमपि स्फुलिङ्गभावं शिखिनस्तस्य शिखी न कल्पतेऽसौ ॥ २८ ॥
विपिनानल धन्यतामुपैषि क्षणमात्रेण दहन्वनान्यमूनि ।
धिगिमं विरहानलं वपुर्मे ज्वलयत्येव निनीषते न निष्ठाम् ॥ २९ ॥

इति मात्रमुपेयुषा समीपं विधिदोषानितरान्दवीयसोऽपि।
अनलेन नलेन वाद्य बाले नियतं जीवितसंशयं गतासि॥ ३०॥
दमयन्ति मया विचुम्बनादि स्मरलीलावसरेषु यान्यकार्षीः।
प्रथयिष्यसि तानि सीत्कृतानि त्वमिदानीं बत पीडिता स्फुलिङ्गैः॥३१॥
मुकुलीकृतदीर्घपक्ष्मलाक्षं स्मरसंदर्भभुवा परिश्रमेण।
श्रमवारिलवाभिषिक्तभालं स्मरणीयं बत तन्मुखं तवासीत्॥ ३२॥
अभिलषितहेमकुम्भकान्त्योः परिणाहिस्तनयोः परिस्फुरन्ती।
अवलोक्य हुताशनस्य हेतीर्ध्रुवमायास्यसि संभ्रमातिरेकम्॥ ३३॥
विपुलस्तनभारपीडितापि क्षणमुत्सृज्य मतिं निसर्गमन्दाम्।
व्रज सुन्दरि सत्वराङ्घ्रिपातं प्रसरत्येष समन्ततः कृशानुः॥ ३४॥
स्खलदङ्घ्रि विशीर्णकेशबन्धं परितः प्रेरितदृष्टि विद्रवन्ती।
वनराजिषु वीक्ष्य वीक्ष्य वह्निं दयिते यास्यसि कीदृशीमवस्थाम्॥३५॥
यदि सत्यगिरो दिवौकसः स्युर्यदि चेनो मम तेषु निर्विकारम्।
स्वमनोरथलङ्घनापराधं दमयन्त्याः स्मरतात्तदेष नाग्निः॥ ३६॥
इति तत्र वनोदरे नरेन्द्रं विलपन्तं मुनिशापबद्धदेहः।
मनुजोचितया गिरा बभाषे भुजगः कोऽपि दवाग्नितापखिन्नः॥ ३७॥
अविपह्यतमेन दह्यमानं मुनिशापेन दवाग्नितेजसैव।
अभिरक्षतु मां महीसुधांशो तव कारुण्यमयः सुधाभिषेकः॥ ३८॥
अकृतोपकृतावपि क्षितीन्दो त्वयि दृष्टे मम कोऽप्यभूत्प्रमोदः।
अविसृष्टजलेऽपि वारिवाहे जगदाश्वासमुपैति घर्मतप्तम्॥ ३९॥
इति वाचमनुव्रजन्नरेन्द्रः फणिनं मण्डलितं क्षितौ ददर्श।
करविच्युतकङ्कणोपमानं वनलक्ष्म्याः शिखिशङ्कया द्रवन्त्याः॥ ४०॥
अथ दंशभयादिवापमुक्तः सविधेऽपि ज्वलता हुताशनेन।
सदयं परिपृष्टशापहेतुं पृथ्वीन्द्रं पुनराह पन्नगेन्द्रः॥ ४१॥
चतुराननसंभवो महर्षिर्मयि रोषं कृतवान्कुतोऽपि हेतोः।
इह मामरुजद्गिरा स तावत्तव राजन्करान्स्पृशामि यावत्॥ ४२॥

क्रमशः परिहीयमाणकान्तेः स्फुटतीवैशम····फणागतो मे ।
अभितापमवाप्य दाववह्नेरसवः कण्ठतटान्तरे लुठन्ति ॥ ४३ ॥
प्रतिसंगरसीम्नि वैरलक्ष्म्याः प्रसभाकर्षणकर्म कर्मठेन ।
नय मां गणयन्पदानि राजन्नरुणाम्भोरुहचारुणा करेण ॥ ४४ ॥
अहमस्मि पतिर्महोरगाणामिह कर्कोटक इत्युदीर्यते यः ।
दशमे तु पदे नरेन्द्र नूनं भवतः श्रेयसि निर्भरं यतिष्ये ॥ ४५ ॥
गणनां विदधन्नलः पदानां स्फुटवर्णं यदसौ दशेत्यवादीत् ।
अवलम्ब्य तदेव दन्दशूकः करमेतस्य ददंश दक्षिणं सः ॥ ४६ ॥
नृपतिर्भुजगेन दष्टमात्रः कमनीयां सहजामपास्य कान्तिम् ।
उपरक्त इवामृतांशुरासीत्तरसैव प्रतिपन्नवर्णभेदः ॥ ४७ ॥
अथ वीक्ष्य तनोस्तथा विकारं परिदंशं च विचिन्त्य निर्निमित्तम् ।
नलमास्थितवैमनस्यमूचे वपुरासाद्य स दिव्यमाशु नागः ॥ ४८ ॥
इदमप्रियवन्मया कृतं यन्नृपते यास्यति तत्तव प्रियत्वम् ।
प्रथमं कटु भेषजं निपीतं परिणामे हि सुधारसत्वमेति ॥ ४९ ॥
नगरे नगरे क्षितीश्वराणां निषधाधीश चिरं चरिष्यसि त्वम् ।
तदमी युधि निर्जिताः कथं त्वां विषहेरन्नवलोक्य निःसहायम् ॥ ५० ॥
अवलम्ब्य नयं गुरुप्रणीतं सततं रन्ध्रनिरूपणप्रवीणाः ।
प्रभवन्ति परे पराभवाय प्रबलानामपि दुर्बलाः क्षितीन्द्राः ॥ ५१ ॥
अधुना तु रिपूंस्त्वमेक एव युधि जेतुं सहितानपि क्षमोऽसि ।
न भजेः परिपन्थितां यदा ते दमयन्तीविरहानलो बलीयान् ॥ ५२ ॥
इति चिन्तयता मया विमुक्तं विषमेतत्त्वचमेव संस्पृशंस्ते ।
असितागुरुलेपनिर्विशेषां वपुषः श्यामलतामिमां व्यधत्त ॥ ५३ ॥
अपि नैर्ऋतिविदं नरेश्वर त्वां कितवं यस्त्रिदशाधमश्चकार ।
अधुनापि शरीरमाविशन्तं गरलं धक्ष्यति मामकं तमेव ॥ ५४ ॥
अधुना त्वचि भाव्यपूर्वरूपः सविधस्थैः स्वजनैरपि त्वमासीः ।
व्रज निष्प्रतिबन्धमाशु राजन्नृतुपर्णस्य नृपस्य संनिकर्षम् ॥ ५५ ॥

भुवनत्रयलुण्ठनापराधाद्दशकण्ठं रणलीलया जिघांसुः ।
जगतः प्रभवोऽपि यस्य वंशे प्रभवं स्वस्य हरिः पुरा विधत्ते ॥ ५६ ॥
कृतमस्य गुणान्तराविधानैस्तव सख्योचित एष राजचन्द्रः ।
उपगन्तुममुष्य सारथित्वं सहसा याहि विभो पुरीमयोध्याम् ॥ ५७ ॥
अवलोक्य कलासु कौशलं ते निजदेहादधिकं स मंस्यते त्वाम् ।
निवसन्निह मेदिनीसुधांशो दमयन्तीमचिरेण लप्स्यसे त्वम् ॥ ५८ ॥
उपयास्यति लोचनातिथित्वं पृथिवीनाथ विदर्भजा यदा ते ।
अपहातुमिमं वपुर्विकारं परिधेहि त्रिदशांशुके तदैते ॥ ५९ ॥
इति वाचमुदीर्य नागराजः सुरयोग्यं वसनद्वयं वितीर्य ।
अनुभाववशान्निजं शरीरं तिरयामास नलस्य पश्यतोऽपि ॥ ६० ॥
इति दर्शितशोकसागरान्तः फणिराजेन पतिर्विदर्भजायाः ।
स च तेन विमुक्तशापबन्धः प्रतिनन्द्योपकृतिं मिथः प्रयातौ ॥ ६१ ॥

सूते यद्विषमेव जीवितहरं कर्कोटकस्याननं
तस्मादेव त्वचश्छलाद्विगलितः पीयूषपूरो नवः ।
प्रत्यङ्गं कवलीकृतस्य दयिताविश्लेषजेनाग्निना
जीवातुर्जगतीपतेर्यदभवत्तच्चित्रतामाययौ ॥ ६२ ॥

नरपतिरथ स्मारं स्मारं वचांसि फणीशितुः
किमपि किमपि प्राप्ताश्वासः समीहितसिद्धये ।
दिनकरकुलोत्तंसेनाधिष्ठितां नगरीं व्रज-
न्नपि गिरिसरिद्दुर्गोन्मार्गानमंस्त न दुर्गमान् ॥ ६३ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते कर्कोटकदर्शनो नाम त्रयोदशः सर्गः समाप्तः ।

## चतुर्दशः सर्गः ।

अथाश्रितां कुम्भसमुद्भवेन क्रमेण कृत्स्नां ककुभं विहाय ।
..............मप्यतिवाह्य किंचिन्नलः प्रपेदे नगरीमयोध्याम् ॥ १ ॥
प्रदातुमर्घ्यं सरयूजलानां पृषद्भिरम्भोरुहगन्धगर्भैः ।
क्रमादयोध्योपवनं व्रजन्तं प्रत्युद्ययौ तं शिशिरः समीरः ॥ २ ॥

एकैकशो निर्जितनामधेयैर्यूपच्छलाद्रोधसि संनिविष्टैः।
इक्ष्वाकुवंशप्रभवैः क्षितीन्द्रैराराध्यमानां सरयूं स भेजे ॥ ३ ॥
अतीत्य कृत्स्नं वनवासखेदं समागतं वीक्ष्य नलं नदी सा।
सितच्छदानां ध्वनिकैतवेन मुहुर्मुहुः स्वागतमन्वयुङ्क्त ॥ ४ ॥
तस्यां मिथः प्रेमवशंवदानि रथाङ्गनाम्नो मिथुनानि वीक्ष्य।
विहाय भैमीमभितश्चरन्तमात्मानमन्तर्नृपतिर्निनिन्द ॥ ५ ॥
अनीतियुक्तानपि[१] नीतिभाजः संख्यावतोऽपि[२] स्वगुणैरसंख्यान्।
विलासिनोऽप्युन्नतसौधसंस्थान्[३] गोष्ठीषु पौरानभिनन्दयन्ति(न्तीम्) ॥ ६ ॥
प्रकामदुर्गां सुखसंचरां च निकामकान्तामपि[४] कामकान्ताम्।
राजन्वतीं वीक्ष्य पुरीमयोध्यां चिरोज्झितां स्वां नगरीं स दध्यौ ॥ ७ ॥
नलेति नाम प्रथितं विहाय स बाहुकेति प्रथयांबभूव।
दशानुरूपां रचयन्ति चेष्टामासाद्य सिद्धिं त्वभियोगभाजः ॥ ८ ॥
कलिस्तु देहे निवसन्नलस्य लेभे भुजङ्गस्य विषेण दाहम्।
अनागसि द्रोहकृतः सुजिह्मान्कियच्चिरं न ग्रसते विपत्तिः ॥ ९ ॥
अवापतुस्तापमतुल्यहेतुं समाश्रितौ तौ वपुरेकमेव।
भैमीवियोगेन नलः कलिस्तु विषेण तीव्रेण भुजङ्गभर्तुः ॥ १० ॥
रूपान्तरेणैव तिरोहितोऽपि गुणैन लोकोत्तर इत्यशंसि।
आमोदपूरेण निवेद्यते हि कुञ्जेन गूढापि पटीरशाखा ॥ ११ ॥
भाङ्गासरेः[५] कर्णपुटोपकण्ठं निन्ये चरैस्तस्य गुणप्रकर्षः।
क्रमेण निम्नैः पथिभिः समुद्रं प्रविश्यते प्रावृषि वारिपूरः ॥ १२ ॥
वृत्तं च विद्यां च दवीयसोऽपि विवेद भाङ्गासरिरस्य सर्वम्।
चक्षुर्नृपाणां हि चराभिधानं गृह्णन्ति भावानपि विप्रकृष्टान् ॥ १३ ॥
स मन्त्रितां मन्त्रविनिश्चयेषु क्रीडारहस्येषु वयस्यभावम्।
गजाश्वशास्त्रेषु विनेतृतां च जगाम तिग्मांशुकुलध्वजस्य ॥ १४ ॥

---

१. नीतिरहितान्, ईतिरहितांश्च. २. गणनायोग्यान्, पण्डितानपि. ३. विवरस्थायिनः, विलासयुक्तानपि. ४. न कामवन्मनोहराम्, निकामं कान्ताम्. 'नि स्यात्क्षेपे-भृशार्थे च नित्यार्थे दानकर्मणि' इति हैमः. ५. भाङ्गासरिर्ऋतुपर्णो राजा.

यथा पुरा दोर्द्रविणप्रभावादभूदयोध्यापतिरस्य वश्यः ।
रूपान्तरेणापि तिरोहितस्य गुणप्रकर्षादभवत्तथैव ॥ १५ ॥
शीलेन वृत्तेन च सख्यभाजोः प्रीतिस्तयोः प्राप तथाभिवृद्धिम् ।
अमात्यलोकोऽपि यथोपभेजे शरीरमात्रेण पृथक्कृतौ तौ ॥ १६ ॥
ततो निदाघेन नितान्तखिन्नं विलोक्य लोकं करुणावतीव ।
तिरोदधाना किरणान्खरांशोराविर्बभूवाम्बुधरागमश्रीः ॥ १७ ॥
स्वमौलिरत्नद्युतिचित्रभासः सुरायुधाख्यस्य भुजंगमस्य ।
वल्मीकरन्ध्राद्बहिरुद्गतस्य भेजे फणत्वं तनुमेव चक्रम् ॥ १८ ॥
अमुक्ततोयं प्रतिरुद्धभानु परस्पर······चित्रदण्डम् ।
अभून्नवाम्भोधरचक्रवालं लोकस्य साधारणमातपत्रम् ॥ १९ ॥
समाश्रितैः सानुषु वारिवाहैः समीरणान्दोलनया विलोलैः ।
प्रसार्यमाणैर्गगने विहर्तुं पक्षैरिव क्षोणिभृतो विरेजुः ॥ २० ॥
मया विसृष्टानि पयांसि नूनं विशोषयत्येष मयूखजालैः ।
इतीव गर्भाश्रितदीर्घरोषा कादम्बिनी चण्डरुचिं रुरोध ॥ २१ ॥
लोकस्य संतापनिरासजन्यां संपद्यते कीर्तिमसौ मदीयाम् ।
इतीव रोषेण सुधाकरस्य ज्योत्स्नां समग्रामपिबत्पयोदः ॥ २२ ॥
यस्यां न सूर्यो न च चन्द्रतारं विभाति यत्रास्ति न कोऽपि भेदः ।
तां प्राप सिद्धिं पवमानयोगादम्भोदसंघः स्तिमितो बभूव ॥ २३ ॥
जम्बूवने पक्वफलापदेशाद्गोलम्बदम्भान्नवमालतीषु ।
रुद्धे घनैर्वैरिणि तिग्मभानौ स्वैरं तमः प्रादुरभूद्दिनेऽपि ॥ २४ ॥
विनातपत्रं पदवी न सेव्या दिनेषु संनद्धबलाहकेषु ।
इतीव नृत्यावसरे मयूराः कलापचक्रं व्यधुरातपत्रम् ॥ २५ ॥
मुदं प्रपन्नेषु विषादवन्तः केकाविलासैर्मुखरेषु मूकाः ।
अस्थैर्यलोलेषु जडत्वभाजः पान्था बभूवुः शिखिनां गणेषु ॥ २६

१. शक्रधनुषः.

समीरयोगात्परिघट्टितस्य घनाम्बुराशेरिव फेनलेखा ।
नभस्तले कामपि कान्तिमापुराबद्धमालाः परितो बलाकाः ॥ २७ ॥
प्रचण्डभानोः किरणान् [सुतीक्ष्णान्] अन्तर्भृशं तापयतः पयोदः ।
निजोदराम्भःपरिशोषशङ्की सौदामिनीपुञ्जमिषाद्ववाम ॥ २८ ॥
मया विना नैष घनश्चकास्ति विलोक्य मां ताम्यति नैषधश्च ।
इतीव विद्युत्परिचिन्तयन्ती मुहुश्चकासे च तिरोदधे च ॥ २९ ॥
कोषार्जनं नीपमहीरुहाणाममुव्ययं चैव वियोगभाजाम् ।
विद्युल्लतालास्यविलासरङ्गं पयोदसंघः सममेव चक्रे ॥ ३० ॥
भैमीं च भीमस्य गृहेषु खिन्नां भार्ङ्गीसरेर्वेश्मनि नैषधं च ।
मुहुर्मुहुर्द्रष्टुमिवाततान सौदामिनी व्योम्नि गतागतानि ॥ ३१ ॥
आसारसेकेन शमं प्रपेदे क्षोणीभृतामङ्कगतो दवाग्निः ।
नलस्य भैम्याश्च जगाम वृद्धिं वियोगजन्मा हृदि मन्मथाग्निः ॥ ३२ ॥
कृतापराधेष्वपि वल्लभेषु रोषं वधूनामपसारयन्तः ।
विश्रान्तिर्मायुर्न मुहूर्तमात्रं कुञ्जेषु दात्यूहसमूहकूजाः ॥ ३३ ॥
घनाम्बुवर्षैरभिषिच्यमाना पौरस्त्यवातेन च वीज्यमाना ।
रोमाञ्चमुच्चैः प्रथयांबभूव तृणाङ्कुरोन्मेषमिषेण भूमिः ॥ ३४ ॥
अथोपपन्नप्रणयेषु दैवाद्दूरं प्रयातेषु सितच्छदेषु ।
शोकातिभारादिव पद्मिनीभिर्नवाम्बुपूरे सरसां न्यमज्जि ॥ ३५ ॥
मानग्रहे वृद्धिमुपागतेऽपि सरित्पतिं ............... ।
वधूविरुद्धं सरितश्चरित्रं तेनैव नूनं प्रथयांबभूवुः ॥ ३६ ॥
आस्कन्धमग्नाः सलिलेषु वृक्षाः कृतार्तनादाः खगकूजितेन ।
शाखाकरैर्वायुवशाद्विलोलैर्मिथः समुद्धर्तुमिवाह्वयन्ति ॥ ३७ ॥
विभिद्य सेतूनभितः स्थलानि समश्नुवानेषु सरिज्जलेषु ।
निगूढपादाः पृथिवीरुहोऽपि तदा बभूवुः प्लवमानकल्पाः ॥ ३८ ॥

१. कुड्मलसंपादनम्.

मया कृतं निर्गमनं मदीयैरम्भोभरैर्निर्वसुधं व्यधायि ।
इतीव दर्पं प्रथयन्पयोदः प्रतिक्षणं तारतरं जगर्ज ॥ ३९ ॥

इत्थं क्रमादम्बुधरागमश्रीर्यथा यथा यौवनमाससाद ।
तथा तथा दुर्विषहा बभूवुः शोकोर्मयो भीमतनूभवायाः ॥ ४० ॥

समृद्धकामापि पुरी विदर्भा शोकेन भैम्याः समवाप खेदम् ।
अप्येकवीरुत्प्रभवः कृशानुः कृत्स्नां दहत्येव वनीं निदाघे ॥ ४१ ॥

ततः समुत्कर्षवतीर्विलोक्य वर्षाः कुलायेष्ववसन्विहंगाः ।
भीमस्य चारास्तु तदापि चेरुर्जामातरं मार्गयितुं नियुक्ताः ॥ ४२ ॥

नलं विना यानि न वेद कश्चिद्रहस्यसंकेतपदानि भैम्याः ।
उदैरयंस्तानि परिस्फुटार्थं गोष्ठीषु गोष्ठीषु गृहे गृहे ते ॥ ४३ ॥

वनेषु शैलेषु सरित्तटेषु स्थलेष्वनूपेषु पुरेषु राज्ञाम् ।
निरूपयन्तोऽप्यनिशं प्रयत्नाद्व्यालोकयन्कापि न नैषधं ते ॥ ४४ ॥

निवृत्य भेजुर्नगरीं विदर्भां नलस्य वृत्तान्तमविन्दमानाः ।
भीमस्य दूताः स्मृतिमागतेन शोकेन भैम्याः प्रतिरुध्यमानाः ॥४५॥

अथेङ्गिताभ्यूहनलब्धवर्णः कश्चिच्चरः प्राप्य पुरीमयोध्याम् ।
नलं समासाद्य रहस्यवादीदमूनि संकेतपदानि भैम्याः ॥ ४६ ॥

नभस्तले संचरता यथेच्छं विहंगडिम्भेन विलोक्यमानः ।
एकाकिनीं काननसीम्नि मुग्धामनागसं मुञ्चति कः सुचेताः ॥ ४७ ॥

दया च लज्जा च मतिश्च नूनं सर्वाश्रयोऽयं परिचारवर्गः ।
जनः कुलीनोऽप्यनया विहीनस्ताभिः प्रकामं परिहीयते यत् ॥ ४८ ॥

मनांसि पुंसां परिणामवद्भिस्तुल्यानि किं पाकफलैर्भवन्ति ।
अन्तः प्रकृत्या विरसान्यमूनि बहिर्बहिर्ये प्रथयन्ति रागम् ॥ ४९ ॥

इत्थं वचो दूतमुखान्निशम्य प्रागेव संस्मृत्य विचेष्टितं स्वम् ।
निगृह्य बाष्पप्रसरं कथंचिदिदं बभाषे निषधाधिनाथः ॥ ५० ॥

---

१. प्रौढिम्. २. अलभमानाः. ३. अचीकथत्. ४. दयादिभिः

प्रतिक्षणं तापयता शरीरं शोकानलेन स्वयमर्जितेन ।
विलुप्तसंज्ञं कितवं विनान्यः प्राणेश्वरीं मुञ्चति कानने कः ॥ ९१ ॥

नूनं रथाङ्गौ विगमे रजन्याः श्रेयः समासंश्रितमश्रुवातें ।
न जीवितं तौ परिमुञ्चतश्चेदसह्यमासाद्य वियोगखेदम् ॥ ९२ ॥

श्रुत्वा वचः कैतवबाहुकस्य पुरीं विदर्भां सहसा स भेजे ।
विदर्भजायाः सविधे च सर्वं शशंस राज्ञा विहितोऽभ्यनुज्ञः ॥ ९३ ॥

सा बाहुकेनोदितमाकलय्य चरोपनीतं किमपि प्रहृष्य ।
निशम्य तस्याकृतिवैपरीत्यं भूयोऽपि शोकाम्बुनिधौ ममज्ज ॥ ९४ ॥

अत्रान्तरे निषधभर्तुरवेक्षणाय
क्षोणीतलं तत इतः सुचिरं विगाह्य ।
सूतोऽस्य कश्चन पथि श्रमनोदनार्थ-
मिक्ष्वाकुवंशतिलकस्य पुरं प्रपेदे ॥ ९५ ॥

आसन्नसंगतिमहोत्सवशंसनाय
विश्रब्धदूतमिव तं प्रहितं स्वलक्ष्म्या ।
पश्यन्नपि प्रथयति स्म निजं न रूपं
रुद्धः फणीन्द्रवचसा निषधाधिनाथः ॥ ९६ ॥

आकारभेदपिहितेऽपि नलेऽन्तिकस्थे
सूतस्य चित्तमभजत्कमपि प्रमोदम् ।
पूर्वाद्रिशृङ्गजुषि वारिधरावृतेऽपि
घर्मद्युतौ सरसिजं स्मितमातनोति ॥ ९७ ॥

तं शुद्धभावमभिगत्य नलः स चैनं
लोकोत्तरैर्गुणगणैरभिनन्दनीयम् ।
सौहार्दबन्धमनिमात्रमुपेयिवांसौ
तावश्विनाविव सदा सहितावभूताम् ॥ ९८ ॥

ज्योत्स्नासारैः स्नपयति जगद्यामिनीजीवितेशे
मन्दं मन्दं वहति कुसुमामोदमिश्रे समीरे ।

स्मारं स्मारं वनभुवि तथा विह्वलां प्रेयसीं स्वां
सायं सायं व्यतनुत नलस्त्यक्तधैर्यः प्रलापम् ॥ ५९ ॥

वैरिण्यः क्षणदाः शशाङ्ककिरणैर्मर्मच्छिदो वासराः
स्मेराम्भोरुहसौरभैर्वनभुवः सप्तच्छदैर्दुस्तराः ।
कासाराः कलहंसकेलिरसितैः.........कूलंकषा
जीवातुस्तव जीवितेश्वरि मया कुत्रापि न प्रेक्ष्यते ॥ ६० ॥

तिर्यञ्चोऽपि सितच्छदाः कमलिनीं संभावयन्त्यागताः
संत्यज्यापि धनाधिनाथदयितं..................सरः ।
तां बालामनुयायिनीं प्रियतमामेकाकिनीं कानने
भ्राम्यन्तीमपहाय जीवितशठः कस्मादयं नैषधः ॥ ६१ ॥

सैवेयं शरदम्बुवाहविषमा निस्तन्द्रचन्द्रद्युतिः
प्रालेयाम्बुलयाभिषेकशिशिरः सोऽयं निषिद्धानलः ।
एतत्तन्मधुपव्रजैरनुसृतं शेफालिकासौरभं
सोऽयं निष्करुणो नलः शशिमुखी सा केवलं नेक्षते ॥ ६२ ॥

इत्थं वाचमुदीर्य भीमतनयाविश्लेषखिन्नं वपुः
पर्यङ्के परिवर्तनव्यतिकरैर्निर्निद्रमायास्य सन् ।
आपृष्टः प्रथितादरेण सुहृदा सूतेन तेनैकदा
तं दाक्षिण्यवशादुवाच रहसि व्याजोत्तरं बाहुकः ॥ ६३ ॥

देवत्र्यम्बकमौलिलब्धवसतिर्यद्वोन्नवृद्धे विधुः
कैलासाधिपतेस्तुलामुपययौ यः प्राज्यया संपदा ।
देवेन्द्रेऽपि निरादरा वृणुत यं वैदर्भराजात्मजा
सोऽयं ते श्रुतिगोचरीकृतचरः कश्चिन्नृपो नैषधः ॥ ६४ ॥

अविनयपथे सक्तस्त्यक्तः कथंचिदयं श्रिया
सह दयितया भ्राम्यन्विन्ध्याटवीषु मयेक्षितः ।
तदनु विधुरस्यास्य प्राणेश्वरीविरहाग्निना
प्रलपितमिदं स्मारं स्मारं विषीदति मे मनः ॥ ६५ ॥

अथ तस्य वाक्यपवनोद्धतार्चिषा
चिरसंचितेन निजशोकवह्निना ।
परिदह्यमानहृदयो मुहुर्मुहुः
श्वसितं विमुच्य निजगाद सारथिः ॥ ६६ ॥

धन्योऽसि बाहुक विनैव परिश्रमेण
यन्नैषधं नयनगोचरतामनैषीः ।
नैनं व्यलोकयमहं पुनरल्पभाग्या-
त्कृत्स्नां समुद्रवसनामपि गाहमानः ॥ ६७ ॥

वैदर्भी तु वने भ्रमन्त्यजगरस्यास्यं प्रविष्टा ततः
कृच्छ्रान्निर्गमिता विधेः करुणया नीता निकेतं पितुः ।
भूयो नैषधसंगमाय मुनिना केनापि दत्ते वरे
विश्रम्भात्तरसा न मुञ्चति शुचा क्लिष्टामपि स्वां तनुम् ॥६८॥

हस्तन्यस्तकपोलपालिविगलद्बाष्पाम्बुधौतस्तनं
निःश्वासोष्मनिपीडिताधरपुटं व्याघूर्णितार्धेक्षणम् ।
ध्यायन्त्याश्च्युतचापलेन मनसा नक्तंदिवं नैषधं
वैदर्भ्याः कवलीकरोति बलवानङ्गानि शोकानलः ॥ ६९ ॥

बाष्पाम्भस्तटिनीरयेष्वनुदिनं गण्डस्थले मज्जतः
पक्ष्मोन्मेषनिमेषयोरपि दृशोर्वा लास्यमभ्यस्यतः ।
बाहू बालमृणालतन्तुतुलनामादातुमाकाङ्क्षतः
संतापश्वसितानिलौ तु सुतनोर्निर्म्लानिमन्विच्छतः ॥ ७० ॥

वारं वारं निषधनृपतेश्चिन्तयोज्जृम्भमाणै-
रुष्णोन्मेषैः प्रसृमरतटे तत्क्षणं क्षीयमाणः ।
प्रत्यासन्नैरपि सहचरीमण्डलैर्नोपलक्ष्यः
सारङ्गाक्ष्याः श्रवणपुलिने निष्पतन्बाष्पपूरः ॥ ७१ ॥

मुकुलितनयनापि प्रेक्षते वैरिसेनिं
सुरभिमपि निदाघं श्वासमाविष्करोति ।

कथयति हृदि खेदं मौनमभ्याश्रयन्ती
कुवलयनयनायाश्चेष्टितं चित्रमास्ते ॥ ७२ ॥

प्राप्तां दैववशाद्विदर्भनगरीं तत्रापि शोकाग्निना
भैमीं जीवितसंशयं गतवतीं निश्चित्य सूतोक्तिभिः ।
आनन्दाङ्कुरमग्रिमं कलयता तीव्रं च खेदोच्चयं
बाष्पाम्भःपिहितेक्षणेन गमिता सा बाहुकेन क्षपा ॥ ७३ ॥

भार्ङ्गासुरिस्तदनु बन्दिजनोदिताभि-
र्भोगावलीभिरपसारितशेषनिद्रः ।
प्रातस्तनेषु विधिषु त्वरमाणचेताः
शय्यानिकेतनमपास्य बहिर्जगाम ॥ ७४ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये
नलचरिते दमयन्तीवृत्तान्तलाभो नाम चतुर्दशः सर्गः ।

## पञ्चदशः सर्गः ।

ततः समाहूय स बाहुकं नृपः सदः समासाद्य समेत्य मन्त्रिभिः ।
पृथक्पृथग्वर्णविशेषचारिणां गिरश्चराणां स्मृतिगोचरेऽकरोत् ॥ १ ॥

अरात्युदासीनसपक्षताजुषां दिनेदिने यद्व्यवसायवेदनम् ।
जिगीषतां दोर्बलशालिनामपि क्षितीश्वराणां प्रथमो ह्ययं नयः ॥ २ ॥

ततश्चरः कश्चन कुण्डिनाह्वयात्पुरादुपेतः क्षितिपं प्रणम्य तम् ।
निजांशुकान्तेन समावृताननः कृताञ्जलिर्वाचमुदैरयद्रहः ॥ ३ ॥

श्रुतं त्वया नाथ यथागतः पुरात्पुरा वनं क्वापि नलो न लक्षितः ।
अमुष्य पत्नी तु विदर्भनन्दिनी यदृच्छया प्राप पितुर्निकेतनम् ॥ ४ ॥

मुहुर्मुहुर्दुःसहतामुपेयुषा चिराय शोकेन हता तपस्विनी ।
भवान्तरेऽपि प्रियदर्शनाशया जुहूषतीयं ज्वलने निजं वपुः ॥ ५ ॥

तपस्विना केनचिदर्पितं वरं प्रतीक्ष्य निन्ये दिवसान्यमून्यपि ।
परेद्युरेषा गमयिष्यति ध्रुवं निजां तनूमिन्धनतां हविर्भुजः ॥ ६ ॥

---

१. स्वबलसमावलेन. २. होतुमिच्छति.

सुतां निजां निश्चिततीव्रसाहसां विलोक्य भीमः सह पौरबन्धुभिः ।
निमज्य शोकाम्बुनिधौ सुदुस्तरे तरीं विधातुं न किमप्यवेक्षते ॥ ७ ॥
प्रभो पुरस्ते विनिवेदितुं मया श्रुतं विदर्भाधिपतेर्गृहेषु यत् ।
अनन्तरं यत्तु विधेयमीक्षसे प्रमाणतां तत्र मनस्तवार्हति ॥ ८ ॥
निवेद्य वृत्तान्तमिमं चरे गते नरेश्वरः प्रेक्ष्य मुखानि मन्त्रिणाम् ।
पुरं प्रयास्यन्नचिरेण कुण्डिनं निजासनार्धस्थितमाह बाहुकम् ॥ ९ ॥
सतां विपत्तीरसतां च संपदः समीक्ष्य को नाम भृशं न दूयते ।
विशेषतः सत्यपि राजमण्डले विदर्भराजस्त्वमिहापरः सुहृत् ॥ १० ॥
इतस्तु गव्यूतिशतद्वयं परं यियासुरेकेन दिनेन कुण्डिनम् ।
अजातपक्षेण खमुत्पतिष्यता शकुन्तशावेन गतोऽस्मि तुल्यताम् ॥ ११ ॥
तदद्य शोकेन विमूढचेतसं विलोकितुं तं सहृदं समुत्सहे ।
तदेव सौहार्दमकृत्रिमं विदुर्न विक्रियां यद्विपदि प्रपद्यते ॥ १२ ॥
रथस्थितं नेतुमिदं तु मां पुरं दिनेन दाक्ष्यं यदि लक्ष्यते तव ।
ऋतेऽरुणं कोऽन्वहमंशुमालिनं सुमेरुमावर्तयितुं प्रगल्भते ॥ १३ ॥
कलासु लोकोत्तरकौशलो भवान्भवादृशोऽन्योऽस्ति न कोऽपि सारथिः ।
न दुष्करं कर्म किमप्यभू.......त्वया सनाथ................. ॥ १४ ॥
इति ब्रुवाणस्य नृपस्य मन्त्रिणः समाहरंस्ते तुरगैर्युतं रथम् ।
व्यतर्कयद्यानवलोक्य बाहुकः पुरीं विदर्भां पुरतः स्थितामिव ॥ १५ ॥
स बाहुकेनोपगृहीतरश्मिभिस्तुरंगमैरूढधुरं रथं स्थितः ।
पुरोधसा संभृतमङ्गलक्रियः पुरीं विदर्भामतिसत्वरं ययौ ॥ १६ ॥
तथा प्रणुन्नाः पथि बाहुकेन ते रयातिरेकं तुरगाः प्रपेदिरे ।
यथा तदीया अपि नेत्ररश्मयः पुरः प्रसर्तुं प्रभुतां न लेभिरे ॥ १७ ॥
स बाहुकं स्यन्दनवाहने तथा विलोक्य लोकोत्तरपौरुषं नृपः ।
तमक्षलीलाहृदयं व्यचिन्तयत्ततः प्रपेदेऽश्वरयस्य वेदिताम् ॥ १८ ॥
ततोऽक्षलीलाहृदयं परीक्षितुं यदेव चक्रे पथि निश्चयं नलः ।
कलिस्तदैवास्य विहाय विग्रहं कृताञ्जलिर्वाचमिमामुदैरयत् ॥ १९ ॥

सुखोचितौ शोकमहार्णवे चिरं न्यमज्जयत्त्वां च विदर्भजां च यः ।
महीपते पापकृतां पुरःसरं सुराधमं मां निगृहाण तं कलिम् ॥ २० ॥
इति ब्रुवाणं करुणानिधिर्नलः कलिं समाश्वासयदुक्तिवैभवैः ।
वरैरभीष्टैः प्रतिनन्द्य तं च स प्रसन्नचेतास्त्रिदशालयं ययौ ॥ २१ ॥
नलस्तु·········समं रथं मुहूर्तविश्रान्तहयं समाश्रितः ।
विदर्भ[जा]लोचनमङ्गलोदयं समर्थसंपन्नमिव द्रुतं ययौ ॥ २२ ॥
विलङ्घयन्वर्त्म यथा यथा त्वया पदे पदे सातिशयं रयं श्रितः ।
तथा तथौत्सुक्यवशादमन्यत प्रकामदूरं नगरं स कुण्डिनम् ॥ २३ ॥
अथास्तशैलोदरभाजि भास्करे सबाहुकस्तामविशत्पुरीं नृपः ।
दमस्वसुः शोकतरङ्गिणीरयं प्रकाशयन्तीं जनलोचनाम्बुभिः ॥ २४ ॥
विदर्भराजस्तु शुचापि विक्लवस्तमर्चयामास गृहानुपागतम् ।
सतां सपर्यासु परिक्षतादरं न जातु जायेत महात्मनां मनः ॥ २५ ॥
ध्वनिर्यदा बाहुकबाह्यवाजिनो रथस्य भैम्याः श्रुतिगोचरं ययौ ।
तदैव तं प्रत्यभिजानती चिरादभून्नलोपागमशङ्किनी च सा ॥ २६ ॥
ततः कथंचिद्धृतधैर्यबन्धना निवार्य बाष्पाम्बुतरङ्गिणीरयम् ।
सुखे च दुःखे च निजे निरन्तरां रहः सखीमित्थमुवाच भीमजा ॥ २७ ॥
अनुक्षणं केशिनि दक्षिणेतरं यथेक्षणं स्पन्दितमातनोत्यधः ।
अतीत्य शोकाग्निरयं दुरत्ययं तथा मनो मे किमपि प्रसीदति ॥ २८ ॥
तथाभिशङ्के फलबन्धनोन्मुखं मुनेः प्रसादं करुणार्द्रचेतसः ।
विमृश्य भाग्यं तु मदीयमीदृशं ह्रियं सुभाविष्वपि हन्त संश्रये ॥ २९ ॥
तथापि मन्ये नलमत्र सारथिं रथे ध्वनिर्यस्य भृशं विजृम्भते ।
मरीचिजालेऽपि निदाघदीधितेर्विशङ्कते वारि मरुस्थलीमृगी ॥ ३० ॥
तदाशु केशिन्युपगम्य सारथिः क एष कस्येत्यवधार्यतां रहः ।
इदं वयस्ये हतजीवितं मम त्वदुक्तवार्तार्थविवेचनावधि ॥ ३१ ॥
विनिश्चयार्थं निषधेशतुस्ततः शशंस तस्यै पृथिवीन्द्रनन्दिनी ।
अनन्यसामान्यममुष्य कौशलं कलासु वृत्तं च वने यदप्यभूत् ॥ ३२ ॥

निशम्य संकेतगिरं दमस्वसुर्नितान्ततीव्रं [च] विचिन्त्य साहसम् ।
अनुद्रवन्ती रथघोषमायतं ददर्श सा कैतवबाहुकं नलम् ॥ ३३ ॥

तथा तमाकारविकारशालिनं विलोकयन्त्याः कुशलं कलासु च ।
सरिज्जलावर्तवशंवदेव नौर्मतिस्तदास्याः सपदि भ्रमं ययौ ॥ ३४ ॥

ततोऽभ्युपायैर्विविधैः परीक्षितं नलं विनिश्चेतुमलब्धवर्णया ।
निशम्य सख्याभिहितं रहोगतां विदर्भजा तां पुनरित्थमब्रवीत् ॥ ३५ ॥

अहो विधातुः प्रतिकूलवर्तिता मयि प्रशान्तिं भजते न जात्वपि ।
यदेष भूयः प्रियसंगमाय मां दुराशया योजयितुं समीहते ॥ ३६ ॥

मलीमसेयं दुरितैः क्व भीमजा क्व चैष लोकैकललाम नैषधः ।
न लक्ष्यते संगतिरेतयोः पुनः कुहूनिशाशीतमयूखयोरिव ॥ ३७ ॥

कुतोऽपि हेतोः कृतरूपवैकृतः कथं च न स्याद्यदि नैषधोऽप्ययम् ।
कृपापराधीनतयापि मां ध्रुवं तदा चिताग्नेर्विनिवारयिष्यति ॥ ३८ ॥

अदक्षिणत्वं मयि संश्रितं····तदाप्यदः साहसमेव मे हितम् ।
प्रियेषु सौभाग्यसमुन्नतिच्युतिः कुलाङ्गनानामपरा परासुता ॥ ३९ ॥

तदद्य शोकाग्निरयः सुदुःसहश्चिताग्निनापि प्रशमं प्रयातु मे ।
अतीतमन्त्रौषधिवीर्यमूर्जितं विषं विषेणैव हि शान्तिमृच्छति ॥ ४० ॥

अलं विलम्बेन निशावसीयते हुताशनं दीपय दीपयेन्धनैः ।
नलोपलाभाय भवान्तरेऽपि मे भवन्तु भूत्याः सखि तस्य हेतयः ॥ ४१ ॥

सखि त्वमम्बा नृपतिः परोऽपि यः समीहितं मे प्रतीहन्तुमीहते ।
स केवलं द्रक्ष्यति पञ्चतां मम प्रपत्स्यते नेप्सितसिद्धिमात्मनः ॥ ४२ ॥

··········वचनं दमस्वसुर्विकृष्य तामप्यनिवार्यसाहसाम् ।
सबाहुके पश्यति पौरमण्डले हुताशनं दीपयति स्म केशिनी ॥ ४३ ॥

कृतप्रयत्नोऽपि विदर्भभूपतिः सुतां निषेद्धुं न शशाक निश्चयात् ।
परासुतानैषधविप्रयोगयोर्द्वितीयमेषा हि विवेद दुःसहम् ॥ ४४ ॥

---

१. ज्वालाः.

विलोलधम्मिल्लमपास्तभूषणं विलुप्तमुक्तावलि लोचनाम्बुभिः।
शुचोऽतिभारेण निपातिताः क्षितौ विमुक्तकण्ठं रुरुदुः पुराङ्गनाः॥ ४५॥
अनारतं निर्गलदम्बुबिन्दुभिर्विलोचने स्वर्पित.......... ।
तथाविधां वीक्ष्य दशां दमस्वसुर्बभूवुरन्याः सुदृशो विचेतसः॥ ४६॥
ततः प्रणम्याग्निमुदञ्चितार्चिषं प्रदक्षिणं कर्तुमियं प्रचक्रमे।
अतीत्य हाहेति रवं पुरौकसामिदं वचः प्रादुरभूच्च नाकिनाम्॥ ४७॥
अलं नलप्रेयसि साहसेन ते सुदुष्करेणाशुविनाशकारिणा।
अनन्तरेऽस्मिन्क्षण एव ते प्रियः प्रहीणशोकां भवतीं करिष्यति॥ ४८॥
उदेष्यता नैषधतिग्मतेजसा विपन्मयी सा रजनी निराकृता।
विजृम्भितामोदभरं चिराय ते विकासमभ्येतु मनःसरोरुहम्॥ ४९॥
पुरः पुरंध्रीकथनेन कीर्त्यतां प्रपन्नया स्वैश्चरितैरनाविलैः।
दिने दिने भीमजयाभिनन्दितश्चिराच्चिरं नैषध शाधि मेदिनीम्॥ ५०॥
त्वया सुधादीधितिवंशकेतन क्षितिं सनाथामभिवीक्ष्य निर्वृताम्।
द्विजाः पुनर्निष्प्रतिबन्धभीतयो मखैर्वितन्वन्तु मुदं दिवौकसाम्॥ ५१॥
इदं निशम्य त्रिदशैरुदीरितं क्षणं बभूव स्तिमितेव भीमजा।
पिनद्धनागेन्द्रनिवेदिताम्बरः स्वरूपतः प्रादुरभूच्च नैषधः॥ ५२॥
ततः प्रमोदोत्तरलैः सुरैः कृते प्रसूनवर्षे नभसः पतत्यधः।
विजृम्भमाणो दिवि दुन्दुभिध्वनिर्नवाम्बुवाहस्तनितैस्तुलां ययौ॥ ५३॥
उपेयुषोर्लोचनगोचरं चिरात्प्रमोदजा बाष्पतरङ्गिणी तयोः।
प्रवृद्धमन्तर्निरवासयद्रुतं परस्परावीक्षणशोकपावकम्॥ ५४॥
ततो निदाघप्लुवितेव मेदिनी नवाम्बुवाहैर्विहिताभिषेचना।
प्रशान्तसंतापभरा सुमध्यमा प्रमोदजालं विदधे विदर्भजा॥ ५५॥

अथ कथमपि दैवात्तीर्णदुःखार्णवं तं
पुनरपि दमयन्त्या संगतं वैरिसेनिम्।
शशिनमिव समेतं ज्योत्स्नया राहुमुक्तं
चिरतरमपि पश्यन्प्राप तृप्तिं न लोकः॥ ५६॥

तदनु भुजगदष्टं बाहुकत्वं विहाय
प्रकटितनिजरूपं नैषधं प्रेक्ष्य हृष्टः ।
द्रुततरमृतुपर्णस्तत्र सख्यं यथार्हं
सहविहरणकाङ्क्षी सोऽपि तं [illegible]नन्दत् ॥ १७ ॥

वैदर्भराजसुतया सह वैरसेनि-
स्तत्रापि कान्यपि दिनानि मुदाध्युवास ।
मौलैः क्रमादुपगतैः सचिवैः स्वकीयैः
संख्यायमानसरणिर्निषधान्प्रपेदे ॥ १८ ॥

मण्डलं निखिलमन्वरञ्जयत्तापसंपदमुदाच्छिनद्ध्रुवः ।
नैषधेन्दुरुदयन्विकस्वरं पुष्करं तु सपदि न्यमीलयत् ॥ १९ ॥

इत्थं निस्तीर्य कृत्स्नां विपदमुपगतं स्वां पुरं वैरिसेनिं
सार्धं वृद्धैरमात्यैः प्रणतपदयुगं ह्रीमता पुष्करेण ।
निष्प्रत्यूहं प्रजानां मुदमुदयवतीमन्वहं निर्मिमाणं
भैमीं सान्द्रानुरागोत्तरलितहृदयां राजलक्ष्मीं च भेजे ॥ २० ॥

लक्ष्मीर्यावदलंकरोति हृदयं विष्णोर्नृसिंहाकृते-
र्यावद्विष्णुपदी च धूर्जटिजटाजूटान्तरे क्रीडति ।
कृष्णानन्दकवेः कपिञ्जलकुलक्षीरोदशीतद्युते-
स्तावत्काव्यमिदं तनोतु कृतिनामन्तःप्रमोदोदयम् ॥ २१ ॥

इति श्रीसान्धिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते निषधेन्द्रद्वितीयसाम्राज्यलाभो नाम पञ्चदशः सर्गः ।

---

**समाप्तोऽयं ग्रन्थः ।**

---

१. स्वभ्रातरम्; (पक्षे) कमलम्

KÂVYAMÂLÂ. 33.

THE

# S'RÎNIVÂSAVILÂSA CHAMPU

OF

## VENKATES'A KAVI

With the commentary of Dharanîdhara.

EDITED BY

MAHAMAHOPADHYAYA PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.


PRINTED AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

1893.

*Price 14 Annas.*

काव्यमाला ३३.

वेङ्कटेशकविविरचिता

# श्रीनिवासविलासचम्पूः।

धरणीधरकृतया टीकया समेता।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना
महामहोपाध्यायपण्डितदुर्गाप्रसादेन,
परवोपाह्वेन पाण्डुरङ्गतनूभुवा
काशीनाथशर्मणा च
संशोधिता।

सा च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता।

१८९३



मूल्यं १४ आणकाः।

# काव्यमाला ।

श्रीवेङ्कटेशकविप्रणीता

## श्रीनिवासविलासचम्पूः ।

श्रीधरणीधरकृतटीकया समेता ।

### पूर्वभागः ।

प्रथमोल्लासः ।

वंशस्ते सुरसी तदस्तु भवतो गोत्रं फणीन्द्राचलो
माताहं जगतां त्रयस्य सविता वामेतरा दृक्सम ।
कान्ते ते शरणं त्वमेव सुमुखीत्येवं हि पद्मावतीं
वाचा संमदयञ्जयत्यनुकलं श्रीश्रीनिवासो हरिः ॥ १ ॥

भवसिन्धुपारगमने कवितामार्गप्रकाशनेऽपि मम ।
मानवमृगराजगुरोः सेवोडुपतरणिसरणिमावहतु ॥ २ ॥

कविता भुवि तावदेव वन्ध्या भविता यावदयं न वर्ण्यते हि ।
तरसा सुरसालवद्वदान्यः सरसालापवशंवदो मुकुन्दः ॥ ३ ॥

उग्रोऽप्यसत्कृतार्यैः कीर्तिविहीनोऽपि पङ्कयुक्तो यः ।
मन्दोऽप्यशनिकठोरे दुर्जनसंघस्तनोतु मयि करुणाम् ॥ ४ ॥

श्रीः ॥ **वंशस्त इति** । वंशादयः पञ्च कुलाद्यर्थका इति प्रथमपक्षे । वेण्वाद्यर्थका इत्युत्तरपक्ष इति कश्चिच्चमत्कारः । तथा चार्थः—'द्वौ वंशौ कुलमस्करौ' इत्यमरः । गोत्रं नाम पर्वतं [च] । 'गोत्रं क्षेत्रेऽन्वये छत्रे सम्भाव्ये बोधवर्त्मनोः । वने नाम्नि च गोत्रोऽद्रौ गोत्रा भुवि गवां गणे ॥' इति हैमः । माता सवित्री मापनकर्ता च । 'जनकः सविता पिता' इति धनंजयः । सविता रविरित्यर्थः । 'शरणं गृहरक्षित्रोः' इत्यमरः । सूर्यचन्द्रलोचनो हरिरिति 'कविसमयः । पद्मावती काचन राजपुत्री ॥ १ ॥ **भवेति** । 'उडुपश्चन्द्रभेलयोः' इति धरणिः । 'भेलः प्लवः' इति सुधा । तरणिर्नौः । पक्षेऽर्कः । 'तरणिस्तरणेऽर्केऽश्वी कुमार्योषधिनौकयोः' इति हैमः ॥ २ ॥ **कवितेति** । सुरसालः कल्पवृक्षः । वदान्यो दानशीलः । वशंवदः स्वाधीनः ॥ ३ ॥ **उग्रोऽपीति** । अत्र विरोधस्त्व-

रसमयजननोल्लसितं सभ्येमभमत्र शब्दजालं मे ।
सद्गणसंपद्दर्शकमथ भूयाद्वृत्तशास्त्रवत्सततम् ॥ ५ ॥

विजयी भवतु । यस्तु स्वस्यैव चरणवत्कमलोल्लासं दधानः । जङ्घावच्छ-रधिगम्भीरः । उदरवद्वलिविभङ्गशाली । नाभिवदात्मभूजननिदानपद्मोप-गूढः । भुजवत्सद्वृत्तशोभितः । करवत्सचक्रनन्दकः । वक्षःस्थलवत्कान्तया श्रियोल्लसितः । कण्ठवत्सन्मालालंकृतः । मुखवत्कलानिधिख्यातियुतः । अधरवद्रक्तरक्तः । दन्तवन्मुक्तावलीहृदयंगमः । नयनवद्रक्तनीलः । ललाटवत्सत्तिलकः । कुन्तलवच्छ्यामाधिकरुचिः । अवतंसवत्कलापमयः । श्रीश्रीनिवासो नाम वसुधाधिपः ।

र्थतः । उग्रः शिवः । आर्या दाक्षायणीति विरोधः । क्रूरः । वर्याः इति परिहारः । एवम-ग्रेऽपि । 'कान्तिः पङ्कं यशस्यपि' इति विश्वः । 'पङ्कोऽस्त्री कर्दमे पापे' इति हेमः । मन्दः शनिः । अशनिः शनिभिन्नः । पक्षे निर्भाग्य इत्यर्थोऽस्तीति । 'मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ ॥' इति सुधा ॥ ४ ॥ **रसमयेति** । रसमयी च सा जनना च रसमयजनना । पक्षे रगणादि नगणान्ताः सप्त-गणाः । सभ्येमम सभामध्ये । पक्षे भगणेन सहितम् ॥ ५ ॥ **विजयी भवत्विति** । स्वस्येति सर्वत्र संबध्यते । कमला रमा क्लीबे पद्मं च । एवमग्रेऽपि । 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः ॥' इति सुधा । शरधिर्जलधिस्तूणीरश्च । '[illegible]' इति जगद्धरः । 'भङ्गस्तरङ्गभेदे च रुग्वि-शेषे पराजये । कौटिल्ये भयविच्छित्त्योः' इति हेमः । आत्मभूर्मदनो ब्रह्मा च । पद्मा रमा कमलं च पद्मम् । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः । 'वर्तुलं निस्तलं वृत्तं' इति च । 'चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारो-पकरणास्त्रयोः ॥ जलावर्तेऽपि' इति मेदिनी । 'नन्दको हरिखड्गे च हर्षके' इति सुधा । मनोहरया संपदा भार्यया रमया च । 'श्रीर्वेषरचनाशोभासंपत्सरलशालिषु । वाणीलक्ष्मीत्रि-वर्गेषु विषे बिल्वेऽपि' इति रत्नमाला । कलानिधिर्विद्वांश्चन्द्रश्च । 'कलनाविद्ययोः (?) शिल्पे कालभेदांशमात्रयोः । चन्द्रस्य षोडशे भागे मूलवृद्धावलं स्त्रियाम् ॥ कला च' इति लिङ्गभट्टः । अनुरक्तोऽत्यनुरक्तः अतिशोणश्च । मुक्ता असंसारिणो मौक्तिकानि च । रक्ता अनुरक्ता नीला देवी यस्य सः, शोणकृष्णश्च । 'नेत्रे पुनर्गर्यापि रक्तनीले' इति भवभूतिः । 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु' इति सुधा । तिलकश्चित्रके वृक्षविशेषे च प्र-भावपि' इति रत्नमाला । असमसूताङ्गनाधिकस्पृहः नीलवर्णेनाधिककान्तिश्च । 'पुंस्युत्तं-साववतंसौ च कर्णपूरे च शेखरे' इत्यमरः । 'कलापो भूषणे बर्हे' इति च । 'तादात्म्यार्थे नि-

किं च, यश्चरणश्लाघ्यं भुजं ललितांसश्रियं वक्षःस्थलीं सर्वतोमुखजातशोभान्वितं पादं च वहति ।

अपि च, यः पादे रमास्पदं चक्षुः नितम्बे कल्याणगुणान्वितं नेत्रं वक्षसि विपुलनयनाभियोगं च धत्ते ।

अपि च, अथोदरशोभां च कण्ठे कंधरोल्लसितत्वं केशेषु कुन्तलसन्स्थितिं पाणौ महाशयाभिगमत्वं सर्वाङ्गे च धारयति ।

यं चाङ्गदोल्लसित सङ्गरचितशोभान्वितसूर्यसुतं रामं रामानुजं चाहुः ।

येन च शरेणेव बहुविदारणक्षमेण सुकविकाव्यबन्धेनेवापरुषाक्षरमैत्रीभाजा महावराहेणेव महीभुजाऽपरसङ्गेन मुमुदे प्रजा ।

- -

कारार्थे प्रावृषीयं मतः स्त्रिया' इति तत्त्वप्रकाशिका । सर्वत्र यथोचित लिङ्गव्यत्ययः । 'मानवा मौलिनो वर्णा देवाश्चरणाः पुनः' इति कविकल्पलता । **किं चेति ।** चरणत्वादश्लाघ्यमिति चमत्कारार्थः । तत्त्वार्थपक्षे तु चेति च्छेदः । रणो युद्धम् । एवमग्रेऽपि । असांश्रियम् । पक्षे ललिता सांश्रियमिति च च्छेदः । मनोज्ञा सलक्ष्मामित्यर्थः । सर्वतः सर्वत्र मुखवज्जाता उत्पन्ना या शोभा । पक्षे सर्वतोमुखजात नीरजम् । **अपि चेति ।** प्रेमास्पद नेत्रमिति चमत्कारार्थः । रत्नास्पद गङ्गेति तत्त्वार्थः । 'सीता चालकनन्दा च चक्षुर्भद्रेति गङ्गानामभेदः' इति श्रीभागवतम् । एवमग्रेऽपि । अत्र नेत्रवाचकबहुशब्दलाभः । 'नयनलोचनचक्षुषि नेत्र' इति जगद्धरः । विपुलनयना मा । 'पारिप्लवकमललोचनः' इति कादम्बरी । 'कथंचित्प्रयत्नः कमलनयनामा' इति पुष्पावतम्सवती । 'कल्याण हेम्नि मङ्गले' इति सुधा । **अपि चाथोदरेति ।** अथोति च्छेदः । उदरस्य शोभां कण्ठे कण्ठवर्तुलमितत्व केशेषु केशवत्समर्थानिस्थानि करे कराभिगमत्वमह इति चमत्कारः । तत्त्वार्थः—अथो इति च्छेदः । दरः शङ्खः । कंधरो मेघः । कमुदकम् । अव्ययमेतत् । कुन्त आयुधभेदः । आशयो मनः । 'कं शिरोऽम्बुनोः' इत्यव्ययवर्गामरः । 'पञ्चशाखः शयः पाणिः' इत्यमरः । 'अथो अथ' इत्यमरः । 'आशयो मानसाधारयोरपि' इति कोषः । **यं चेति ।** अङ्गदस्तारेयः । सङ्गरो युद्धम् । चिता सवद्धा । सूर्यसुतः सुग्रीवः । पक्षे असितेति च्छेदः । विष्णुमित्यर्थः । 'अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्गणे रणे' इत्येकाक्षरकोषः । 'अ इति ब्रह्म' इति श्रुतिः । 'अक्षराणामकारोऽस्मि' इति गीता । 'अक्षरः सर्ववागात्मा परब्रह्माभिधायकः' इति श्रीभाष्यम् । गदा कौमोदकी । सङ्गः समागमः । सुरतमिति यावत् । सूर्यसुता कालिन्द्याख्या कृष्णपत्नी । **येनेति ।** बहुविदेति रणक्षमेणेति पदद्वयम् । पक्षे एकमेव पदम् । एवमग्रेऽपि । बहुविदा बहुज्ञेन । पक्षे विदारण भेदनम् । अपरुषा, अपगतरोषेण । नाशरहितमित्रत्वभाजा । पक्षे अकोरवर्णघटनाभाजा । महीभुजा राज्ञा । ध्वर्थर-

यस्मै च माधवाय ललितलताङ्गीकरणयोग्याय उत्कलिकाभिरामा स-
ज्जालकोल्लसिता अनेककोषस्थितिरमणीयायोजना लताततिरिव रुक्मिण्यादि-
महिषीजनता न केवलं स्पृहयांबभूव, किं तु लसत्पीनपयोधरचक्ररुचये प्र-
द्युम्नोद्धवानुकूलाय अक्रूरभानुमुखोल्लसिताय तिरस्कृतकुजन्मने गजमल्लद-
र्शितविक्रमक्रमाय तथाविधो गोपबालाजनश्च ।

यस्माच्च बहुलयादवसंततिर्दवसंततिर्बहुलया चाभूत् ।

यस्य चाद्भुतकरश्रियं सदाशयो बहु मेने । श्रवांसि श्रुतयोगायन्ति ।
चेतोवृत्तिं सुमनस्ततयोऽभिनन्दन्ति ।

यस्य चामीकरोज्ज्वला भूपा गजाश्च । चापापकारिणी भ्रूलता मनोवृ-

सक्तेन । पक्षे भूदेवीबाहालिङ्गनस्वादाभिज्ञेन । **यस्मै चेति** । माधवो मधुकुलोत्पन्नो र-
मापतिर्वा । लताङ्गी वनिता । करणं नागादिबन्धः । उत्कलिका उत्कण्ठा । सज्जेति अ-
लकोल्लसितेति पदद्वयम् । अनेकेति च्छेदः । नैकेत्यर्थः । उषःस्थितिरमणीयायोजना प्रातः-
कालस्य या स्थितिः सद्भावः । उषःकाल एवेति यावत् । रमणीयमायोजनं सुरतं यस्याः
सा । अनेन पद्मिनीत्वमुक्तम् । उषसि सुरतप्रिया पद्मिनीति कामशास्त्रम् । 'चक्रे त्रिवि-
क्रमाभिधं करणम्' इति नागशास्त्रे । स्पृहायोगे चतुर्थीति । पक्षे माधवो वसन्तः ।
लतानामङ्गीकरणमङ्गीकारः । उत्कृष्टकोरकः सर्वार्चीनकोरकः । कोषः कोरकः । आयो-
जनं संबन्धः । 'क्षारकं जालकं क्लीबे कलिका कोरकः पुमान्' इत्यमरः । अत्र कोरकवा-
चकबहुशब्दलाभः । 'सुरत क्रीडा निधुवनमायोजनमाहुरर्थविदः' इति हारावली । 'कोशः
कोषः' इति द्विरूपः । 'कोशनिषदौ' इति गदसिंहाख्यविवेकः । 'कोषः स्वङ्गपिधाने स्यात्कु-
ड्मलेऽर्थौघदिव्ययोः' इति शान्ते पान्ते च लिङ्गाभट्टः । 'प्राप्तता जनता' इत्याद्यमरः । **किं
त्विति** । लसत्सजलमेघकदम्बकान्तये । पक्षे स्फुरत्पीनकुचचक्रवाककान्तिः । इति वि-
भक्तिव्यत्यासः । एवमग्रेऽपि । प्रद्युम्नः उद्धवः अक्रूरो भानुश्च यादवभेदः । पक्षे प्रद्युम्नो-
द्भवो मदनोत्सवः । अक्रूरभानुमुखं चन्द्रवदनम् । 'मुखशब्द आद्यर्थकः' इति सुधा । ह-
तनरकासुराय । पक्षे तिरस्कृतकुत्सितोत्पत्तिः । गजः कुवलयापीडः । मल्लश्चाणूरः । वि-
क्रमः पराक्रमः । क्रमो रीतिः । पक्षे गजश्रेष्ठवद्धंसनपादविक्षेपरीतिः । 'उद्धवस्तु स्यान्महे
कृष्णमन्त्रिणि' इति रत्नमाला । 'मुखं वदने मुख्ये ताम्रे छद्मनि' इति भागुरिः । **यस्मा-
दिति** । दवसंततिर्बहुलया । कदाचित्कृष्णो दावानलं पपाविति पुराणम् । पक्षे बहुला च
सा यादवसंततिश्च । **यस्य चेति** । करः श्रयश्च । श्रवः श्रुतिश्च । चेतो मनश्चेत्येकार्थत्र-
यमात्मनश्चित्तचमत्कारः । तत्त्वार्थस्तु—अद्भुतकरी विस्मयकरी श्रीः संपत् । सदाशयः
सत्प्रवीणमनाः । श्रवांसि यशांसि श्रुतयो वेदाः । सुमनस्ततयो देवसमूहाः । **यस्य चा-
मीकरेति** । चामीकरं स्वर्णम् । पक्षे चेति च्छेदः । अमी प्रसिद्धाः । करः शुण्डादण्डः ।

